स्थाल्यां वैडूर्यमय्यां पचति तिलखलं चान्दनैरिन्धनौघैः
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कमूलस्य हेतोः ।
छित्त्वा कर्पूरखण्डान् वृतिमिह कुरुते कोद्रवाणां समन्तात्
प्राप्येमां कर्मभूमिं न चरति मनुजो यस् तपो मन्दभाग्यः ॥ ३४३ ॥

स्थितिः पुण्येऽरण्ये सह परिचयो हन्त हरिणैः
फलैर्मेध्या वृत्तिः प्रतिनदि च तल्पानि दृषदः ।
इतीयं सामग्री भवति हरभक्तिं स्पृहयतां
वनं वा गेहं वा सदृशमुपशान्तैकमनसाम् ॥ ३४४ ॥

स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो त्वां
ध्येये ध्यानं निवेश्य क्षितिधरकुहरग्रावपर्यङ्कमूले ।

---

343 {N} Om. in A Y2 NS1, Punjab 2101 N extra 2. — a) C F2-5 H2 W1.3 X2 Y4-6.8 T वैडूर्यमय्यां; X1 वैडुर्यमय्या. C W1 तिलकणांश्च; Eo F3 X Y3.7 (by corr.) तिलखलिं; F4 W3.4 तिलखलीं; Y1A.4 तिलकणं; Y1BC च लशुनं; G1 M1-3 तिलगणं; G2t तिलखिलं; M4.5 तिलमलं (for तिलखलं). B D Eot. 1t. 2. 3. 5 J W1 X G1.3 M चंदनैर्. B2 D F2.5 W1 X1 Y1 इन्धनाद्यैः; E F1.3 I J2 Y3-6 T1 G3-5 °नौघैः; G2t इंदनोधैः. — b) B2 लिगलाग्रैर्; H1 लांगलाग्र्यैर्; J2 लांगुलाग्रैर्; W1t लंगिलाग्रैर्; W3t लौंगलाग्रैर् E H3 I J1 W2t X2 Y3 विलखति; T2 विलिखत. D E1t. 3t. 5t F1.2 H2.3 J Y1AC. 4-6. 7 (orig.) T G M अर्कतूलस्य; F3 अर्कमूल्यस्य; W3C.4 X2 Y1B कर्ममूलस्य. — c) C भित्वा. B श्रीखंड- (for कर्पूर-) C -वृक्षान्; Eot. 3 -खंडं; Y4 G2.3 -षंडान् (for -खण्डान्). E3 वृतिहिम; J3 G5 वृतिमिव; X कृषिमिव; Y1 कृषिमिह; M3 वृतिरिह. C कोद्रवस्या-; J2 कोद्रवीणां; W1t कौद्रवाणां. — d) Eo-2.5 विचलति; J1t रचयति; J1C न चरितः; Y5.8 T G4 न भजति. J1 M3 मंदभाग्याः.

BIS. 7226 (3311) Bhartr ed. Bohl and lith. ed I 2. 98. lith. ed. II. 100, III. 99. Galan 104, SRB p. 95. 127, SBH. 3045, SRK. p. 77. 10 (Bh.) SSD. 4. f. 26b.

344 {V} Found in A D E, F4 V39 [Also BORI 329 V39; Punjab 2101 V38; BORI 328 and Jodhpur 3 V41, Punjab 697 V37; NS1 V44; NS2 V32 (31); NS3 V110 (extra)] — a) Eo.2-4 F4 स्थितः; E5t पुण्यारण्ये. F4 परिवृतो. A3 हि रणैः. — b) D मध्या: Eo.2 मेधा-; F4 मूलैर् (for मेध्या). F4 प्रतिदिनवदित्यादि दृषदः. — c) D हि विरक्तौ; F4 (m v. as in text) हरशक्तिं (for हरभक्तिं). E5t स्पृहयति.

BIS. 7228 (5316) Bhartr. lith. ed. I. 3. 96, II. 33.

345 {V} Om. in A, F1, BORI 329, Punjab 2101 and NS1.2. Missing in Y7. — a) J3 शंखैः (for गाङ्गैः). B (B2 orig) C -कुसुमजलैर्: X -कुसुमचयैर्; Y8 -फलकुसुमैर्: G4 -कुसुमशतैर्. D [अ]पि भो त्वां; F3 विभोस्त्वां; G1 मिवेश; M4.5 निवेश्यं (for विभो त्वां). — b) B H ध्यानविर्विश्य पश्यन् (H3t तत्व); C J2 ध्येयं ध्याने (J2 °नं) निवेश्य; D क्वापि ध्यानं निवेश्य; E2t. 3t. 4t F2 ध्येये (E3 °यं) ध्यानं नियोज्य (F2 ज्यं); F4

आत्मारामः फलाशी गुरुवचनरतस् त्वत्प्रसादात् स्मरारे
दुःखं मोक्ष्ये. कदाहं समकरचरणे पुंसि सेवासमुत्थम् ॥ ३४५ ॥

स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् ।
विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ ३४६ ॥

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः ।
भवाभोगोद्विग्नाः शिव शिव शिवेत्यार्तवचसः
कदा स्यामानन्दोद्गतबहुलबाष्पप्लुतदृशः ॥ ३४७ ॥

---

ध्याये ध्याने निवेश्य; $J_3$ धैर्यध्यानं निवेश्य; X ध्यायञ्चित्ते निवेश्य; $Y_{1.2}$ $G_4$ ध्याये ध्यानं निवे($Y_2$ °वि)श्य; $Y_3$ ध्येये ध्यानं विशेष्य; $M_2$ ध्येये ध्यानं निषेव्य; $M_{4.5}$ ध्यायं ध्यायं भवंतं. $F_3$ -कुहरे ग्राव-; $Y_3$ M -कुहरग्राम-. $F_5$ -पर्यंकमूलं; W -शय्यानिषण्णः. — [c]) B Est X °रामोपलीनो; $B_2$ m.v. $G_{2.3}$ °रामोफलाशी: $F_3$ °रामैकलाभो; $F_5$ °रामोपि लीनो; I °रामे फलाशी; J °रामोपि लीला (for °रामः फलाशी). $G_5$ -परस्; $M_3$ -गतस् (for -रतस्). $J_{1.3t.3}$ तत्प्रसादात्; $X_1$ कृत्पुरस्तात्; $X_2$ त्वत्पुरस्तात. D I (orig.) $Y_{4.5}$ मुरारे; Eo $F_5$ J2t स्मरारेर्; X $Y_3$ $M_5$ पुरारे (for स्मरारे). — [d]) Ec दुःखान्. D $E_4$ $F_3$ G3t मोक्षे कदाहं; Eo. 3t $F_2$ मोक्षैक: $W_3$ मोक्ष्ये क°; $X_1$ मोक्ष्ये कदा हे. $F_{2.3}$ समचरणकरे; J3t. 3 समकरचरणं; J2c करचरणसमं; X स्मरहरचरणे; $G_4$ करचरणसमे [commentators factor समकर = स + मकर or सम + कर; W com मकरध्वजे पुंसि मदने सेवा.]. It -समर्थ; $Y_3$ -समुत्थं; $G_1$ -समर्थः. E दुःखं मोक्ष्ये (Eo. 3t °क्षे-; Ec दुःखान्मोक्ष्ये) कदाहं तव चरणरतो ध्यानमार्गैकप्रभः (Eo °कप्रभैः; $E_5$ °कचस्तैः.).

BIS. 7238 (3313) Bhartṛ. ed. Bohl. 3. 88. Haeb. 83. lith. ed. I and II. 86, III. 84. Galan 82.

**346** {N} Om. in A C $J_1$ S BORI 326. — [b]) $B_1$ $F_5$ -विदीर्णां; It -विकीर्णां; $J_{2.3}$ विदीर्णा. — [c]) $F_{1.3}$ $J_2$ विजयश्री- — [d]) Eo. 3 व्युत्पन्ना; $J_2$ वृक्षं न (for व्युत्पन्न-). $J_3$ उत्पन्नवनिताविव.

BIS. 7251 (5327) Bhartr. ed. Bohl. extra 18. Haeb. 2. 97. Satakāv. 92; SRB. p. 78. 5.

**347** {V} Om. in I, BORI 329 and Punjab 2101. $Y_7$ missing. — [a]) D स्फरंचन्द्र-; Eo. 2–4 स्फुरत्स्फारा; $F_2$ $J_3$ स्फुरत्स्फार-; X स्फुरच्चंद्र-; G2t स्फुरत्स्फूर- (for स्फुरत्स्फार-). — [b]) Eo. 2c. 5 $Y_3$ $T_3$ $M_4$ सुखासीनः; $E_3$ सुखाशीनाः; $F_{1.4}$ समासीनाः; $J_3$ समासीनः. C श्रांत-; $W_2$ $T_2$ शांता- (for शान्त-). D क्व सरितः; $F_3$ क्व परितः (for द्युसरितः). — [c]) Eo. 3. 5 °गोद्विग्नः; H1t. 3t $T_3$ $J_2$ °गोद्विग्नाः. B $E_3$ H1c. 2. 3 $M_5$ °त्यास-; $F_3$ °त्यस्त-; $J_1$ °त्यर्थं-; W X $Y_{2.4-6.8}$ $T_1$ (c v. as in text) $G_{1.4.5}$ $M_{1.2}$ °त्युच्च-; $Y_1$ °त्यच्छ-; $M_3$ °त्युक्त- (for °त्यार्त-). $A_2$ $E_{3.4}$ -वचसा; $A_3$ -वचनाः. — [d]) $J_3$ कथं (for कदा). C $E_2$ स्यामो हर्षोद्गत-; $F_2$ स्यामो मोदोद्गत-; $F_3$ स्यामो नंदोद्गत-; W $Y_{4-6.8}$ T $G_{4.5}$ वास्यामोंतर्गत-; X स्यामो नंदामृत-; $G_1$ $M_{1-3}$ नु ($M_3$ om. नु) स्यामोंतर्गत-(for स्यामानन्दोद्गत-). C D $E_{2.4}$ $F_{2-5}$ $W_1$ $Y_3$ M -बहल-. C $F_{2.3.5}$ J W X Y ($Y_7$ missing) T $G_{1.4.5}$ $M_{1-3.5}$ -बाष्पाकुल-; Est $M_4$ -बाष्पाप्लुत-. $A_2$ Eo. 3–5 $W_2$ -दृशा; $Y_{4-6}$ $T_2$ -दृशां; $Y_8$ $T_{1.3}$ -दशां; T1ov. -दृशां (for -दृशः).

BIS. 7254 (3317) Bhartr. ed. Bohl. 3. 85. Haeb. 80. lith. ed. I. 83, II. 42, III. 81. Galan 79; SSD. 4. f. 30a.

स्मृता भवति तापाय दृष्टा चोन्मादवर्धिनी ।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥ ३४८ ॥

स्रजो हृद्यामोदा व्यजनपवनश् चन्द्रकिरणाः
 परागः कासारो मलयजरजः सीधु विशदम् ।
शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशो
 निदाघर्तावेतद् विलसति लभन्ते सुकृतिनः ॥ ३४९ ॥

स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा परितोषमेति न च तत् तस्य क्षुधाशान्तये ।

---

348 {S} Om. in F5 I, BORI 326, BU and Punjab 697. E3 order *acbd*. — [a]) F4 J2 W1.4 Y2.3 G1.3.5 M3 श्रुता; J1 W2 Y6.7 श्रुत्वा W3 स्मृत्वा; G2 श्रुतं (for स्मृता). B[a] (orig.) E2t Y1t पापाय; F2 तद्धाय; W4 तामाय. — [b]) A2 E0.2t.3 J W X2 Y7 G4 M2.3 दृष्ट्वा. B E1 (and Ec) F1.2 H तु (for च). E0.1 F4 °वर्धनी; F1–3 H Y1B 2.6.8 T G1–3.5 °कारिणी (for °वर्धिनी). — [c]) E3t दृष्टा; J W2–4 Y1B G4 स्पृष्ट्वा. Y1B भवतु. C G1 पापाय; J1c कोपाय (for मोहाय). D स्पृष्टा मोहाय जगतां. — [d]) J1 सा नामा; Y6 साधूनां; Y7 सा नारी (for सा नाम).

BIS 6565 (3320) Bhartr ed. Bohl 1 73. Haeb. 76. lith ed. II. 30. Subhāsh. 17, 133 and 293; SBH. 1225, SRH. 183. 3 (Vallabha), SS. 44. 26, SU. 566; SN. 275, SSV 1393, JS. 404, SLP. 4 75 (Bh.)

349 {Ś} Om. in C, Jodhpur 3 and Ujjain 6414. Omitted or missing in F5. Wrongly om. in B2. NS1 Ś94, V3. — [a]) J G1 हृद्यामोद-; X हृद्यामोदो. F2.4 -पवनाश्च; H -पवनं; G1 -किरणश् (for -पवनश्). B1 T3 G1.4 M1–4 चंद्रकिरणः; H चंद्रकिरणान्; G3t चंद्रिकिरण. — [b]) H परागं; J1 प्रसव; M5 वरांगः (for परागः). E3 कासारान्; F4 पुष्पाणां; H कासारं. B1 F2.4 It J Y1 M1–3 °रसः; D G4 °रसाः; H °रसं. A2 E3c F1.3 Y8 G1.2t सिंधुविशदं (G1 °दः); D शीधुविशदं; E2t.3c J2 X2 Y4–8 T1.3 G5 शीधु विशदं; W4 सीधु विषदं; G3 M4.5 शीधु विशदं; G4 लोध्रविशदः; M1.2 शीधु विशदः; M3 शीतविशदः. — [c]) H शुचिं; G1 रुचिः. H सौधोत्संगं. A E3t.4t F3 वचनं; Y8 -वसनाः; G1 -तपनः; M3 -वचनाः (for वसनं). — [d]) D निदाघार्तें चैतद्; E J2 Y2 T2 M4.5 निदाघार्तावेतद्; F3 निदाघार्तावेता; W निदाघास्तु (W1 °स्त)र्णं तद्; X निदाघार्तावेते; Y8 निदाघांते चैतद्; G1 निदाघावर्तापिद्; G4 निदाघास्तौ केचिद्; M2 निदाघे तानेतान्; M3 निदाघार्तापेताद्. W X सुखमुप- (for विलसति). Y1B भवंते (for लभन्ते).

BIS. 7263 (3322) Bhartr. ed Bohl. 1. 39. Haeb. 42. lith. ed. II. 93. Śatakāv. 67. SK. 3. 335; SLP. 5. 29 (Bh.).

350 {N} Om. in X. — [a]) A3 J2 स्वप्न-; B2 D F3–5 W H Y1 स्वल्पं; J1t अल्प-; Y8 स्वल्पः. A1 E3 J1t -वशावशेष-; B3 -वशाविशेष-; E0–2.5 °-वसावशेष-; F1 W4 (by corr.) Y1.4–8 T G4.5 M -वसावसेक-; F2 G1 -वसावसैक-; F5 -वसावसेन; Io -वसाविशेष-; G2.3 -वसावसेन. C F1.2 J W Y3–8 T G4 M4.5 अप्यस्थि गोः; M3 अप्यस्थिदं. — [b]) B1 स्वा लब्ध्वा; B2 C D E0–3.4t W1.2 Y3 श्वा लब्ध्वा; Io M3 के लब्ध्वा; J2 श्वा लब्धो. F3 (m. v. as in text) नितरामास्य-; J1t लभतवास्य; W न तु तस्य; Y1 न

सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥ ३५० ॥

स्वादिष्ठं मधुनो घृताच् च रसवद् यत् प्रस्रवत्यक्षरं
दैवी वागमृतात्मनो रसवतस् तेनैव तृप्ता वयम् ।
कुक्षौ यावदमी भवन्ति धृतये भिक्षाहृताः सक्तवस्
तावद् दास्यकृता जनैर्न हि धनैर्भोगान् समीहामहे ॥ ३५१ ॥

हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत् कल्पितं
व्यालानां पशवस् तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ ३५२ ॥

---

पुनस्तस्यात्; Y2 M1.3–5 न पुनस्तस्य (for न च तस्य). W3.4 (by corr.) G2.3 क्षुध: (for क्षुधा-). C आगतं गतमपि; Y8 एकमागतमपि; T3 अंकमागतवति; G3t अंगमागतमपि. A2.3 E5 त्यक्ता. Y3 [अ]भिहंति. — d) Y3 सर्वं; G1.4 M2.3 प्राय: (for सर्व:). W3 कृत्स्नगतोपि. Y8 वांछित-. C स्वात्मानुरूपं; G2.3 सत्त्वानुकूलं.

BIS. 7322 (3335) Bhartr. ed. Bohl 2. 33. Haeb. 34. lith. ed. I, II and Galan 30, III. 18. Pañc. ed. Orn. I. 12. Hit. II. 39. ed. Rodr. p. 160. Subhāsh. 307, SRB. p. 79. 22, SBH. 1025 (Pañc.), Tantrākhyāyika I. 7; Edgerton. I. 9; SSD. 2 f. 102b.

351 {V} Found in A B C D E, F1 V12, ISM Gore 144 V194 [Also BORI 329, Punjab 2101 and Jodhpur 3 V7; GVS 2387 and NS1 V10; NS2 V8, V94 (93), BU V9, NS3 V105 (extra)]. — a) F1 यन्मिष्टं (for स्वादिष्ठं). A रसाच्च; C F1 घृताच्च; E घृतादि. A1c.2 F1 यत्प्रश्रवत्यक्षरं; B यच्चच्छ्रवत्यक्षयं; D यस्मात्पथाक्षरं; E0 यत्प्रस्रवत्यक्षरं; E2 स्रुवत्यक्षरं; E5 आप्रश्रवत्यक्षरं. — b) D E ISM Gore देवी. B C °तात्मना. B C रसवता; D रसवती. B2 तृष्णा (for तृप्ता). — c) C कक्षा (for कुक्षौ); E5 भिक्षाहृतां. A1c E3 शक्तवस्. — d) B C E0.3 F1° कृतार्जं(E0 जु)नैर्न हि धनैर्; E5 °कृतार्जनैव वसुभिर्. ISM Gore नि- (for हि). C वृत्तिं (for भोगान्). D समीहाम ते; E2 समीहामहै.

BIS. 7337 (5374) Bhartr. ed Bohl. 3. 97. Haeb. 92. Śatakāv. 109. Missing in the MSS. compared by Bohl. and Weber.

352 {V} Om. in W. Missing in Y7. — a) Y1.2.4–6 T2.3 °लब्धम्; Y8 °लाभम् (for °लभ्यम्). F3 Y8 कल्पितो. — b) G1 M3 इतरे (for पशवस्). A3 E0.3t Y2.3 M5 स्पृष्टाः; D पुष्टाः; J Y4.6.8 T G4 तुष्टाः; M3 स्वस्थाः (for सृष्टाः). — c) Y8 °लंघने. Y1 -स्थिरधियां; M4 -क्षमधिया. J3t वृत्तिं; J3c वृत्त:; T2.3 युक्तिः (for वृत्तिः). — d) J1.3 यावन्वेषयतां; Y5.6.8 T1 G4 तामन्वेषयतां. E3t.5t F1 Y3 G2 प्रयाति. C Y8 सहसा (for सततं). G1 गताः (for गुणाः).

BIS. 5437 (2460) Bhartr. ed. Bohl. 3. 98. Haeb. 94. lith ed. II. 10. Śantiśataka 1. 13 (Haeb. 412). Kavyakal. and Kāvyas. 23; SRB. p. 97. 13 (Bh.); SBH. 3139 (Bh.); SHV. f. 1a, 2 (Bh.); SU. 1052; SSD. 4. f. 2a.

## GROUP III

[Stray verses from single versions, isolated Bhartṛ. MSS, and anthologies; in alphabetical order; only a few variants have been reported.]

अकिंचनस्य दान्तस्य शान्तस्य समचेतसः ।
मया संतुष्टमनसः सर्वाः सुखमया दिशः ॥ ३५३ ॥

अक्रोधवैराग्यजितेन्द्रियत्वं क्षमादयाशान्तिजनप्रियत्वम् ।
निर्लोभदाता भयशोकहारी ज्ञानस्य चिह्नं भयलक्षणानि ॥ ३५४ ॥

अङ्गुल्यः पञ्चमे मासे दृष्टिकुक्षौ च षष्ठमे ।
संचारः सप्तमे मासे अष्टमे नयनेषु च ॥ ३५५ ॥

अङ्गेन गात्रं नयनेन वक्त्रं न्यायेन राज्यं लवणेन भोज्यम् ।
धर्मेण हीनं खलु जीवितं च न राजते चन्द्रमसा विना निशा ॥ ३५६ ॥

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम् ।
यतस् तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत् ॥ ३५७ ॥

अज्ञं कर्माणि लिम्पन्ति तज्ज्ञं कर्म न लिम्पति ।
लिप्यते रसनैवैका सर्पिषा करवद् यथा ॥ ३५८ ॥

अज्ञानामवनीभुजामहरहः स्वर्णाभिषेकोत्सवाज्
ज्ञातुः श्रीयुवरक्तभूपरसिकश्लाघैव संमानना ।
सारासारविवेकशून्यरमणीसंभोगसाम्राज्यतः
सारङ्गेन्दुमुखीविलोककपटश्चातुर्ययूनां मुदे ॥ ३५९ ॥

अज्ञेष्वज्ञो गुणिषु गुणवान् पण्डिते पण्डितोऽसौ
दीने दीनः सुखिनि सुखवान् भोगिनो भोगिभावः ।
ज्ञाता ज्ञातुर्युवतिषु युवा वाग्मिनां तत्त्ववेत्ता
धन्यः सोऽयं भवति भुवने योऽवधूतेऽत्रधूतः ॥ ३६० ॥

अत्र यत् पतितं वर्णबिन्दुमात्राविसर्गकम् ।
भ्रमप्रमाददोषाद् हि क्षन्तव्यं तत् सुबुद्धिभिः ॥ ३६१ ॥

---

353 ISM Kalamkar195 V104 (107) — BIS. 26 (3372). Bhartr. lith. ed. I. 3. 100; SRB. p. 75. 10. 354 BORI 326 V106 (105). — SL. f. 57a. 355 Meh V147. 356 HU2145 N125 (107).

357 — SHV. f. 36a. 170 (Bh.), SS. 49 16; SN. 626; SSD. 2. f. 142a; SV. 522; JSV. 209. 2 358 Y₂ N96. 359 J₃ extra 2. 360 HU632 f. 8a (marg.). — SRB. p. 178. 1000 (मौने मौनी). 361 ISM Gore144 V186.

अधरामृतेन पित्तं नश्यति वायुः पयोधरयुगेन ।
अनवरतरतेन कफं त्रिदोषशमनं वपुर्नार्याः ॥ ३६२ ॥

अधीत्य सकलं श्रुतं चिरमपास्य घोरं तपो
  यदिच्छसि फलं तयोरह हि लाभपूजादिकम् ।
छिनत्सि तरुपल्लवप्रसरमेव शून्याशयः
  कथं समुपलिप्सते सुरसमस्य पक्कं फलम् ॥ ३६३ ॥

अध्यात्ममन्यवधीयतां भवरसे वैराग्यमानीयतां
  विद्वद्भ्यः समधीयतां सुरसरित्तीरे सदा स्थीयताम् ।
भिक्षार्थे व्यवसीयतामनुदिनं सत्कर्म संचीयतां
  विष्णुश् चेतसि धीयतां परतरे ब्रह्मण्यथो लीयताम् ॥ ३६४ ॥

अनन्तविभवभ्रष्टा दौर्भाग्यपरितापिनी ।
शोच्यति प्राप्य जीवत्वं भर्तृहीनेव नायिका ॥ ३६५ ॥

अनर्थमकरागारादस्मात् संसारसागरात् ।
उड्डीयते निरुद्वेगं सर्वत्यागेन पुत्रक ॥ ३६६ ॥

अनल्पं जल्पन्तः कति बत गता नो यमपुरं
  पुरस्तादस्माकं विधृतवदना व्यात्तनयनाः ।
अतीता यद्येवं न हि निजहितं चेतसि वयं
  वहामो हा मोहाद् विषयविषजातोदनशिनः (?) ॥ ३६७ ॥

---

362 F2 Ś100. — [a]) पीतं. — [b]) नश्यति ते पयोधराश्लेषे. — [cd]) अनवरताश्लेषेण च च कम्पत्रिदोषं शमनीयति पथ्या ।; BORI 331 Ś105 (107), GVS2387 Ś101. — [a]) अधररसपानेन पित्तं. — [b]) नश्यति वातं पयोधरस्पर्शात्. — [d]) तस्याः (for नार्याः). BVB5 Ś104. — [b]) शमयति वातं (for नश्यति वायुः). — [c]) अविरलसुरतेन. — [d]) स्त्रीणां (for नार्याः); Nag1087 Ś99 (100). — SBH 2340; SHV. App. II (f. 2a) 13; SLP. 2. 20. 363 BORI328 Ś103. — [c]) छिनत्सि लुतयस्तरो ।; BU Ś104. — [a]) चिरमुपास्य. — [b]) तयोरिह हि. — [c]) छिनासि...शून्याशया. — [d]) °लिप्स्यसे; Bik 3279 Ś93 (95); Bik 3280 Ś96.

364 HU468 V113; Ujj6414 V109 (110). — BIS. 3328 (1412) Bhartṛ. in Schiefner and Weber. p. 26. Śāntiśataka 3. 11. in Haeb. 422. Śatakāv. 32. Nītisaṃk. 75; SDK. 5. 68. 2 (p. 322, Bh.).

365 ISM Gore144 V176. 366 ISM Gore144 V183.

367 C V45. — [b]) विधृतनयनाः व्यात्तवदना. — [c]) प्रतीता. — [d]) मोहाद्विषयजातव्यवसिताः; D V96. — [b]) व्यात्तनयनाः. — [c]) प्रतीना[ता?] येप्येवं. — [d]) महामोहाद्व्याप्तविषय°; BORI328 V100 (98); IO 1151b V47; HU1387 V98; HU1376 V44; Bik 3279 V101 (98); Bik 3280 V99 (100).

अनृतं साहसं माया मूर्खत्वमतिलोभता ।
अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥ ३६८ ॥

अन्तर्विषमता ह्येता बहिरेव मनोहराः ।
गुञ्जाफलसमाकारा योषितः केन निर्मिताः ॥ ३६९ ॥

अपि सर्वविदो न राजते वचनं श्रोतरि बोधवर्जिते ।
अपि भर्तरि नष्टलोचने विफलः किं न कलत्रविभ्रमः ॥ ३७० ॥

अपूर्वो दृश्यते वह्निः कामिन्याः स्तनमण्डले ।
दूरतो दहते गात्रं गात्रलग्नः सुशीतलः ॥ ३७१ ॥

अपेक्षन्ते न पात्राणि न स्नेहं न दशान्तरम् ।
सदा लोकहितासक्ता रत्नदीपा इवोत्तमाः ॥ ३७२ ॥

अफलस्यापि वृक्षस्य छायां सर्वः समीहते ।
निर्गुणोऽपि वरं बन्धुर्यः परः पर एव सः ॥ ३७३ ॥

अभित्त्यावुत्थिते चित्रे दृश्यते भित्तिराततता ।
अहो विचित्रा मायेयं भ[म?]ग्नं तुण्डं शिला प्लुता ॥ ३७४ ॥

अमेध्यपूर्णे क्रिमिजन्तुसंकुले स्वभावदुर्गन्धमशौचमध्रुवम् ।
कलेवरे मूत्रपुरीषभाजने रमेत मूढो न रमेत पण्डितः ॥ ३७५ ॥

---

**368** D V150; Bik 3280 N39; BORI 326 V105 (104) — [b]) °लोभतः. — [c]) अशौच्यं. — BIS. 328 (109) Vṛddhacāṇ. 2. 1, Pañc. ed. orn. I. 149. ed. Bomb. 195; Hit. ed. Schl. ad. I. 189, Johns I. 208, Vet. in LA p. 21 (III) 17. Galan. Varr. 49. Subhāsh. 219, SRB. p. 348. 1, SRK. p. 113 (Sphutaśloka); SM. 1398; SN. 270; SSD. 2. f. 165b, SSV 1383, JS. 398.

**369** D V149; BORI 326 V104 (103). — BIS. 346 (119). Pañc. ed. Koseg. I. 211. IV, 59. ed. Bomb. I. 196. IV. 87. ed. orn. I. 156; Subhāsh. 23. 294; SRB. p. 348. 22, SM. 1411, SSD. 4. f. 20a; SSV. 1396.

**370** Bar5199 N5.

**371** Wai2 extra 2 (corrupt). — BIS. 451 (161) Śṛṅgāratilaka 18. Subhāsh. 15; SRB. p. 277. 11; SLP. 3. 26.

**372** Y1 N81 (80); Y4-8 G1-3, 5 and Goa N80. — [c]) G3, 5 Goa रक्ता (for °सक्ता). — BIS. 455 (165) Subhāsh. 147; ŚP. 235; SRB. p. 46. 42; SBH. 224; SRH. 31. 3; SA. 16. 1; Padyaracanā (KM. 89 p. 110. 30); SK. 2. 77; SU. 1483; PT. 1. 3; SN. 622; SSD. 2. f. 97a.

**373** C N105 (106); BORI329 N103 (98); Bik 3280 N53; Bik 3279 N72. — SA. 37. 6. **374** ISM Gore144 V180. **375** Ady XXV-L-2 Ś41.

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ३७६ ॥

अये दिष्ट्या नष्टो मम गृहपिशाचीपरिचयः
परावृत्तं मोहात् स्फुरति च मनाग् ब्रह्मणि मनः ।
विकारोऽप्यक्षाणां गलित इव निर्भाति विषयात्
तथापि क्षेत्रज्ञः स्पृहयति वनाय प्रति मुहुः ॥ ३७७ ॥

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥३७८॥

अरण्यं सारङ्गैर्गिरिकुहरगेहाश्च हरिभिर्
दिगन्ता मातङ्गैर्वनमपि सरोजैरनुगतम् ।
त्वया चक्षुर्मध्यस्तनवदनसौन्दर्यविजितैः
सतां माने म्लाने मरणमथ वा दूरशरणम् ॥ ३७९ ॥

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थले कमलरोपणं सुचिरमूषरे वर्षणम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतस्
तदन्धमुखमण्डनं यदबुधे जने भाषितम् ॥ ३८० ॥

अरुणांशुरुचं नवोदितं कुचयुग्मप्रसृतां निभिनीम्(?) ।
घनकुङ्कुमरागशङ्किनी मुहुरक्षोयमूर्मिवारिभिः ॥ ३८१ ॥

---

376 — BIS. 550 (203) Bhartṛ. in ŚP. MS. Danapraśaṁsā 6. 2. 35 in Galan Hit. ed. Schl. I. 64 ed. Johns. 12; Vikramacaritra 67. Pañcatantra ed. Bomb. V. 38, Śp. 273 (*anon.*), SRB. p. 70. 9, SBH. 498 (Bhattodbhaṭa); SDK. 5. 35. 2 (p. 301, Keśaṭa), SRH. 168. 6 (Udatta). SA. 16. 13; ST. 5. 5; VS. 356 (Keśaṭa); SU. 1484; PT. 1. 4; SG. f. 15b, SSD. 2 f. 106b; SSV. 443.

377 — SDK. 5. 65. 1 (p. 320, Bh.).

378 C N103 (104) — [b]) दैवहतं; BORI329 N100 (95); Bik 3279 N45; Bik 3280 N64. — BIS. 567 (208), Pañc. ed. Koseg. I. 24. ed. Bomb. I. 20. 323. V. 44. Hit. ed. Schl. II. 17. ed. Johns. 16; Śp 446; SRB. p. 91. 47; SRK. p. 72. 26 (Prasaṅgaratnāvalī); SRH. 35. 55 (Itihāsa); SS. 23. 16; SSD. 4. f. 2b; SKG. f. 18b.

379 F₄ Ś59. — SRB. p. 177. 990; SRK. p. 234. 39 (Sphutaśloka). Mahānāṭaka. 2. 46; SLP. 4. 42.

380 — BIS. 570 (209). Pañc. ed. orn. I. 255, Edgerton I. 104; Tantrākhyāyikā I. 105; SRB. p. 40. 55 (Bh.), SBH. 448 (Bh.); SRH. 124. 20; SRK. p. 37. 25; Kuvalayānanda 68a (53a). Alaṁkārasarvasva (KM. 35 p. 100); SK. 2. 106; PT. 8. 10; SSD. 2. f. 146a; JSV. 120. 2.

381 ASP1888 extra 2.

अर्था हसन्त्युचितदानविहीनचित्तं
भूमिर्नरं च मम भूमिरिति ब्रुवाणम् ।
जारा हसन्ति तनयानुपलालयन्तं
मृत्युर्हसत्यवनिपं रणरङ्गभीरुम् ॥ ३८२ ॥

अर्थाः पादरजःसमा गिरिनदीवेगोपमं यौवनं
मानुष्यं जलबिन्दुलोलचपलं फेनोपमं जीवितम् ।
धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापहतो जरापरिणतः शोकाग्निना दह्यते ॥ ३८३ ॥

अवचनं वचनं प्रियसंनिधावनवलोकनमेव विलोकनम् ।
अवयवावरणं च यदंशुकं व्यतिकरेण तरङ्गसमर्पणम् ॥ ३८४ ॥

अवज्ञानाद् राज्ञां भवति नृपहीनः परिचरं
जनस् तत्प्राधान्याद् भवति न समीपे बुधजनः ।
बुधैस् त्यक्ते राज्ञो भवति न च नीतिर्गुणवती
विनष्टायां नीत्यां सकलमपि शुष्येन् नृपकुलम् ॥ ३८५ ॥

अविदितशपसविशेषा वाणी निःसरति वक्त्रतो येषाम् ।
गुदवदनविवरभेदो रदनैरनुमीयते तेषाम् ॥ ३८६ ॥

अविरलमदजलनिवहं भ्रमरकुलानीकसेवितकपोलम् ।
अभिमतफलदातारं कामेशं गणपतिं वन्दे ॥ ३८७ ॥

अव्याधिगात्रमनुकूलतरं कलत्रं
वेश्म प्रसिद्धविभवं निशिता च विद्या ।
श्लाघ्यं कुलं चरमकालगतिः समर्थो
मातुः कटाक्षपरिणामविभूतयस् ते ॥ ३८८ ॥

---

**382** Y2 N40. — SRB. p. 176. 956, SRK p 226. 54 (Sphuṭaśloka); SL. f. 31a. **383** D V148; Meh V155, BORI 326 V97 (96), HU2144 V96 (92). — BIS. 599 (217) Hit ed. Schl. I 149. ed. Johns. 163. Vikramaca. 272. Subhāsh. 172; SRK. p. 94 5 (Bh), SS. 23. 13, SN. 394.

**384** Y8 Ś22. — SDK. 2. 8. 4 (p. 73, Kālidāsa), Kavīndravācanasamuccaya 250. **385** Bik 3280, Ben60-10 and Ben57-4 N13 — [b]) ततस्तत्प्राधान्या°; IO1854 f. 23a extra. — BIS 658 (241). Hit. ed. Schl. II. 75. ed. Johns. 76. ed. Rodr. p. 177, SRB. p. 152. 412.

**386** Ma. 5 N. I-11. — BIS. 682, Subhāsh. 258.

**387** ISM Kalamkar 195 N1(0), perhaps not meant as a Bhartṛ. śloka.

**388** Ady XXIX-E-2 N II, (final, without number).

असत्यमप्रत्ययमूलकारणं कुवासनासद्मसमृद्धिवारणम् ।
विपन्निदानं परवञ्चनोर्जितं कृतापराधं कृतिभिर्विवर्जितम् ॥ ३८९ ॥

असारः संसारः सरसकदलीसारसदृशो
लसद्विद्युल्लेखाचकितचपलं जीवितमिदम् ।
यदेतत् तारुण्यं नगगतनदीवेगसदृशम्
अहो धार्ष्ट्यं पुंसां तदपि विषयान् धावति मनः ॥ ३९० ॥

असारे खलु संसारे सुखभ्रान्तिः शरीरिणाम् ।
लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः ॥ ३९१ ॥

असीव्यद् देहे स्वे पशुपतिरुमाङ्कं समघनो
विगुप्तो गोपीभिर्दुहितृमयात् सा कमलभूः ।
यदादेशादेतज् जगदपि मृगीदृक्परवशं
स वश्यः कस्य स्यादहह विषमो मन्मथभरः ॥ ३९२ ॥

अहिरिव जनयोगं सर्वदा वर्जयेद् यः
कुणमिव वसु नारीं त्यक्तकामो विरागी ।
विषमिव विषयार्थान् मन्यमानो दुरन्ताञ्
जयति परमहंसो मुक्तिभावं समेति ॥ ३९३ ॥

अहो अहीनामपि लेहनं स्याद् दुःखानि नूनं नृपसेवनानि ।
एकोऽहिना दष्टमुपैति मृत्युं क्ष्मापेन दष्टस्तु सगोत्रमित्रः ॥ ३९४ ॥

आकाशमुत्पततु गच्छतु वा दिगन्तम्
अम्भोनिधिं विशतु तिष्ठतु वा यथेच्छम् ।
जन्मान्तरार्जितशुभाशुभकृन्नराणां
छायेव गच्छति * कर्म फलानुबन्धि ॥ ३९५ ॥

आत्मानं धर्मकृत्यं च पुत्रदारांश् च पीडयन् ।
देवतातिथिभृत्यांश् च स कदर्य इति स्मृतः ॥ ३९६ ॥

---

389 HU 2145 N45 (33). — SRB. p. 83. 2; SRK. p. 112. 2 (Kalpataru).

390 ISM Gore144 V193, GVS2387 V61 and BVB5 V104 (extra) — [d]) मतिः (for मनः).

391 Gujarati P. P. ed. p. 164 V107. — BPS. f. 42a. 25.

392 Ei Ś110 (extra). 393 X V69. 394 Bik 3279 V3.

395 BORI 328 V83 (82) — BIS. 849 (3675). Śantiś. 3. 21 in Haeb. p. 424. Nītisamk. 80; SRB. p. 93. 73. — [d]) छायेव न त्यजति कर्मफलानुबन्धः; SRK. p. 77. 12 (11) (PT.). 396 ISM Kalamkar195 V90 (93).

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ३९७ ॥

आदौ मज्जनचीरहारतिलकं नेत्राञ्जनं कुण्डलं
नासामौक्तिकमालतीविकरणं झंकारकं नूपुरम् ।
अङ्गे चन्दनचर्चितं मणिगणः क्षुद्रावलि[ र् ] घण्टिका
ताम्बूलं करकङ्कणं चतुरता शृङ्गारकाः षोडश ॥ ३९८ ॥

आपन्मूलं खलु युवतयस् तन्निमित्तोऽवमानस्
तासां यावत् सलिललहरीभङ्गुरः पक्षपातः ।
अप्येवं भो परिणतशरच्चन्द्रबिम्बाभिरामं
दूरीकर्तुं वदनकमलं नालमस्मत्प्रियायाः ॥ ३९९ ॥

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ ४०० ॥

आयुर्लेखा पवनचलना श्लिष्टदीपोपमेया
संपच् चैषा मदवशचलत्कामिनीदृष्टिलोला ।
तीव्रश् चान्तर्दहति हृदयं विप्रयोगः प्रियेभ्यस्
तस्मादेतत् सततममलं ब्रह्म शान्तं प्रपन्नाः ॥ ४०१ ॥

आलिङ्गत्यन्यमन्यं रमयति वचसा लीलया वीक्षतेऽन्यं
रोदित्यन्यस्य हेतोः कलयति शपथैरन्यमन्यं वृणोति ।
शेते चान्येन सार्धं शम[ ? य ]नमुपगता चिन्तयत्यन्यमन्यं
स्त्रीमाया दुश्चरित्रा जगदहितकरी केन कष्टेन सृष्टा ॥ ४०२ ॥

आलोड्य सर्वशास्त्राणि विचार्यैवं पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ४०३ ॥

---

397 Ana1788 N101 — BIS. 938 (337). — [a]) आदेयस्य प्रदेयस्य. Hit. ed. Schl. IV. 94. ad. II, 138. ed. Johns. II. 144. IV. 98, SRB. p. 161. 354; SHV. f. 101b. 94; PT 9. 20; BPB. 11.

398 Bik 3275 S111. — SBH. 2137. 399 Ms.5 Ś III-20.

400 BVB2 N59, BVB5 extra marg. f 3b; Bik 3281 and 3278 N65; K. T. Telang's MS. F (Kathavate) N65. — SRB. p. 69. 13; Tantrākhyāyikā II. 109; SRH. 13. 6. — [d]) शेषा (for अन्या). SS. 17. 15; SM. 1218; SSD. 2. f. 107a; SSV. 1203; SKG. f. 12a, Prabandhacintāmani 265 (Bh.).

401 D V1.5, BORI 328 V165 (156) — [a]) आयुश्लेषा. — [b]) संपद्वेषा... °दृष्टलोला. — [c]) तीव्रस्त्वान्त°; Bik. 3279 V159 (55).

402 F4 Ś62 — [b]) शृणोति (for वृणोति); U116414 Ś62. — SS. 44. 3; SSD. 4. f. 20a. 403 1SM Kalamkar 692 V67.

आशया ये कृता दासास् ते दासाः सर्वदेहिनाम् ।
आशा दासीकृता येन तस्य दासायते जगत् ॥ ४०४ ॥

आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला ।
यया [बद्धाः] प्रधावन्ति मुक्तास् तिष्ठन्ति कुत्रचित् ॥ ४०५ ॥

आस्तां सकण्टकमिदं वसुधाधिपत्यं त्रैलोक्यराज्यमपि देव तृणाय मन्ये ।
निःशङ्कसुप्तहरिणीकुलसंकुलासु चेतः परं वलति शैलवनस्थलीषु ॥ ४०६ ॥

आहारनिद्राभयमैथुनं च समानमेतत् पशुभिर्नराणाम् ।
ज्ञाने नराणामधिको विशेषो ज्ञानेन हीनाः पशुभिः समानाः ॥ ४०७ ॥

इदं नासीन् न चोत्पन्नं न चासीन् न भविष्यति ।
तत् तद् ब्रह्मैव सद्रूपमिदमित्थमवस्थितम् ॥ ४०८ ॥

इन्द्रं शस्त्रधरं अमन्थमुदधिं पञ्चाननं पद्मजं
सिन्धुं स्वादुजलं शिवं सितगलं कामं च सद्विग्रहम् ।
शैलानक्षधरांश्च तथैव च हयान् लक्ष्मीपतिं पिङ्गलं
जाने सर्वमिदं * * रघुपते दत्त स्वयं हारिणा ॥ ४०९ ॥

इन्द्रः प्रधानं दिवि देवतेषु विप्रो मनुष्येषु नदीषु गङ्गा ।
गावः पशुष्वेषु धने च धान्यं सर्वत्र गात्रस्य शिरः प्रधानम् ॥ ४१० ॥

इयं पल्ली भिल्लैरनुचितसमारम्भरसिकैः
समन्तादाकीर्णा विषविषमबाणप्रणयिभिः ।
तरोरस्य स्कन्धे गमय समयं कीर निभृतं
न वाणी कल्याणी तदिह मुखमुद्रैव शरणम् ॥ ४११ ॥

---

404 V91 in Pt. Gaṅgāprasād's printed ed. Moradabad 1912.

405 Ady XXVIII-G-56 V11. — SRB. p. 76. 10 — [d]) पशुवत् (for कुत्रचित्); SRH. 175. 17; SK. 6. 206; SSD. 4. f. 16a.

406 — BIS. 1070 (406). Śāntiś. 2. 15. Haeb. p. 418. Nītisaṁk. 68. Śatakāv. 28. RKB. f. 39a (Bh.); SDK. 5. 65. 3 (p. 320, Śālavāha); SRB. p. 368.34.

407 Ujj 6414 V108 (109); HU 468 V112. — BIS. 1077 (409) Bhartṛ. in Schiefner and Weber p. 25 ff. Hit ed. Schl. pr. 24. ed. Johns. 25. Dampatiśa. 25. Subhāsh. 139. Cāṇakyanītidarpaṇa 17. 17; SA. 7. 10. SS. 14. 15; SN. 175; SSV. 712. 408 ISM Gore 144 V174.

409 MS. Lele (Kolhapur). Extra 2 (corrupt). — SL. f. 31d.

410 C Ś84 — [d]) गात्रं शिरसः; [C₂ Ś89].

411 — BIS. 1129 (3755) Bhartṛ. in Śp. Śukānyokti 7; Padyaracanā (KM. 89. p. 98. 39, Bh.); VS. 156; SK. 6. 511; SU 1201 (Bh.); SSD. 2. f. 24b.

इयत्येतस्मिन् वा निरवधिचमत्कृत्यतिशयो
वराहो वा राहुः प्रभवति चमत्कारविषयः ।
महीमेको मग्नां यदयमवहद् दन्तशल[क?]लैः
शिरः शेषः शत्रुं निगिलति परं संत्यजति च ॥ ४१२ ॥

इयमुच्चधियामलौकिकी महती कापि कठोरचित्तता ।
उपकृत्य भवन्ति निःस्पृहाः परतः प्रत्युपकारभीरवः ॥ ४१३ ॥

इयमुदरदरी दुरन्तपूरा यदि न भवेदभिमानभङ्गभूमिः ।
कथमिह सा दशा सहन्ते कुटिलकटाक्षनिरीक्षणं नृपाणाम् ॥ ४१४ ॥

इह किं कुरङ्गशावक केदारे कलममञ्जरीं त्यजसि ।
तृणबाणस् तृणधन्वा तृणघटितः कपटपुरुषोऽयम् ॥ ४१५ ॥

इह तुरगशतैः प्रयान्तु मूर्खा धनरहिता विबुधाः प्रयान्तु पद्भ्याम् ।
गिरिशिखरगतापि काकपङ्क्तिः पुलिनगतैर्न समत्वमेति हंसैः ॥ ४१६ ॥

उच्चैरेष तरुः फलं च पृथुलं दृष्ट्वैव हृष्टः शुकः
पक्वं शालिवनं विहाय जडधीस् तां नालिकेरीं गतः ।
तामारुह्य बुभुक्षितेन मनसा बुद्धिः कृता भेदने
आशा तस्य न केवलं विगलिता चञ्चुर्गता चूर्णताम् ॥ ४१७ ॥

उच्छिष्टं करखर्परं पथि गतं मूर्खैर्जडैर्धिकृतं
विप्रैस् तत्त्वविचिन्तकैर्मनसि तं स्वात्मप्रबोधे कृतम् ।

---

412 B N65. — a) °स्यतिशये. — b) वराहो राहुर्वा. — c) °वहद्दन्तसमये. — d) निगलितपरः; E4 N69; BU N66 (64); RASB G7747 N67 (66); NSI and and Jod 1 N68 (69); Jod 3 N66 (67), Pun 2101 N68 (69), Pun 697 and Bik 3275 N68; Bar 5199 N71; HU 193 N66. — BIS. 1126 (3753) Bhartṛ. ed. Bohl. extra 16. Haeb. 2. 67. Śatakav. 87, SRB. p. 248. 96.

413 F5 N107 (105); RASB G7747 N111; NSI N115 (118). — BIS. 1128 (3754) Śp — a) इयमुन्नतिसत्त्वशालिनां — b) महतां — c) दूरतः (for निःस्पृहा). — d) °साङ्क्या (for °भीरवः); SA. 27. 63. — a) इयमुन्नतसत्त्वशालिनां — b) महतां — c) दूरतः (for निःस्पृहाः) — d) °संकटाः (for °भीरवः); SKG. f. 17b; SRB. p. 49. 157 (Deveśvara).

414 HU2145 V95 — SRB. p. 96. 6.

415 — BIS. 1134 (3757); Śp. 939; SRB. p. 233. 99; SRK. p. 180. 6 (Rasikajīvana); SU. 1242 (Bh.).

416 — BIS. 1137 (431); Śp. 198, SRB. p. 39. 23; Padyaveṇi 770 (Bh.); PT. 8. 38; BPS. f. 20a. 112, SSD. 2. f. 109a.

417 Bik 3280 N48; Ben60-10 N47. — BIS. 1161. Subhāsh. 173. 257; SRB. p. 241. 140.

418 F1.2 V110 — c) शुष्कं (for मुक्तं). — d) मिथस्तालिकाः; SVP159 V extra 20; Pun 697 V122 — a) संदिष्टं करकर्परं पथिगतं क्षुद्रैः कृतं निन्दनं. — b) न समितं चात्मप्रबोधेच्छु-

नृत्यन्तं च दिगम्बरं च जटिलं बालेश्च च मुकं जडं
डिम्भाश्च चोपहसन्ति चत्वरपथे दत्त्वा मुहुस् तालिकाः ॥ ४१८ ॥

उडुगणपरिवारो नायको यः सुधायाः
स्वतभिषगनुयातः शंभुमूर्धावतंसः ।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ॥ ४१९ ॥

उत्खातान् प्रतिरोपयन् कुसुमितांश्च चिन्वन् लघून् वर्धयन्
कुञ्जात् कण्ठकिनो बहिर्विरचयन् विश्लेषयन् संहतान् ।
अत्युच्चान् नमयन् शनैरवनतान् संवर्धयन् भूतले
मालाकार इव प्रपञ्चचतुरो राजा चिरं नन्दति ॥ ४२० ॥

उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
क्लेदिनी स्त्रीसमासक्तिः किं मूढस्य न जायते ॥ ४२१ ॥

उत्तिष्ठ क्षणमेकमुद्वह सखे दारिद्र्यभारं मम
श्रान्तस् तावदहं क्षणान् मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन सहसा गत्वा श्मशाने शवो
दारिद्र्यान् मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः ॥ ४२२ ॥

---

तम्. — [c]) युक्तं (for मुक्तं). — [d]) हत्वा मुहुश्चेटिकां; also HU 271 V133; Meh V152 (खिङ्ग नई); Bik 3278 and 3281 V131 चिन्नई; VSP V132 विभ्रई.

419 X N89. — BIS. 1168. Subhāsh. 130 — [cd]) भवति विकलरश्मिर्मण्डलं प्राप्य भानोः परसदनमुपेतः को न यातो लघुत्वम्; SRB. p. 96. 4 (in परगृहवासः); SBH. 576; SRK. p. 75. 1 (Kalpataru); SA. 31. 4; ST. 25. 6; SHV. App. I (f. 4a); VS. 249; SK. 3. 14; SN. 879; SSD. 2. f. 144a; SMV. 7. 9. [cf. 209].

420 Bik 3280, Ben60-10 and 57-4 N14; IO 1854. f. 23a (extra). — BIS. 1171 (440) Var. Bhartṛ. in Schiefner and Weber p. 26. Navaratna 7 in Haeb. p. 3 in Petrow. p. 38. Nitisamk. 34. Śp. 1294; SRB p. 142. 15; SBH. 2947; SRK. p. 124. 24 (Śp.); SMV. 20. 13, also f. 45b (extra in 75), JSV. 119. 1; Hanūmannāṭaka 9. 34.

421 ISM Kaḷamkar846 Ś32; NS1 V1 (corrupt), probably extra Ś stanza displaced. — Śp. 4144; SRB. p. 371. 119; SBH. 3341; Jñānārṇava of Śubhacandra; AMD. 460.

422 BORI 326 V8 (7); HU271 V13; Bik1027 V74. — BIS. 1190 (446). Pañc. ed. Koseg. V. 24. Vikramaca. 154b. Subhāsh. 25; Tantrākhāyikā II. 60; SRB. p. 67. 68; SBH. 3195; SDK. 5. 48. 2 (p. 309, Vasukalpa); SRK. p. 56. 6 (Kalpataru); ST. 43. 15; SHV. f. 65a. 682, f. 81a. 78; SSD. 2. f. 140b.

उत्पादिता स्वयमियं यदि तत्तनूजा
तातेन वा यदि तदा भगिनी खलु श्रीः ।
यद्यन्यसंगमवती च तदा परस्त्री
तत्त्यागबद्धमनसः सुधियो भवन्ति ॥ ४२३ ॥

उत्सवादपि नीचानां कलहोऽपि सुखायते ।
कपर्दकार्थलाभेन कुशलो बहु मन्यते ॥ ४२४ ॥

उदग्रा यौवनयोगाः कुरूपं रूपमावचे ।
यथा तथाब्यये केलिंबा[?]अपि च माधुर्यम् ॥ ४२५ ॥

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न भवति पुनरुक्तं भाषणं सज्जनानाम् ॥ ४२६ ॥

उदीरितोऽर्थः पशुनापि गृह्यते हयाश् च नागाश् च वहन्ति नोदिताः ।
अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ ४२७ ॥

उदेति घनमण्डली नटति नीलकण्ठावली
तडिद् वलति सर्वतो वहति केतकीमारुतः ।
तथापि यदि नागतः स सखि तत्र मन्येऽधुना
दधाति मकरध्वजस् त्रुटितसिञ्जिनीकं धनुः ॥ ४२८ ॥

उद्यमं कुर्वतां पुंसां फलं मार्जारकर्मवत् ।
जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥ ४२९ ॥

---

423 — SRB. p. 70. 36 (Bh.); SBH. 523 (Bh.); SS. 17. 42; SM. 1175; SN. 444; SSV. 1161. 424 ISM Gore144 V187.

425 BORI 329 N115 (110) corrupt.

426 Wai2 extra 5. — d) न चलद्विहृशा भामिनि कर्मलेखा (corrupt); MS. Lele (Kolhapur) extra 1. — BIS. 1232 (462), Vikramaca. 249. Kavibhaṭṭa Padyasamgraha 6 in Haeb. 530. Prasaṅgābh. 15b. Subhāsh. 209; SRB. p. 51. 222, VS. 846; SS. 46. 4; SL. f. 28b; SN. 796, SSD. 2. f. 100a; SSV. 316.

427 — SHV. f. 31b. 99 (Bh.); SS. 14. 13; SK. f. 147b; PT. 3. 3; SN. 725; SSD. 2. f. 102a; SMV. 9. 15.

428 Wai2 Ś101 (corrupt). — SU. 513, SK. 3. 312; SRB. p. 341. 57; SG. f. 61b.

429 SVP159 V extra 21. — SRB. p. 82. 1 (Pañc.); SSV. 331; JS. 70; JSV. f. 303a (margin.).

उद्यानेषु विचित्रभोजनविधिस् तीव्रातितीव्रं तपः
कौपीनावरणं सुवस्त्रममितं भिक्षाटनं मण्डनम् ।
आसन्नं मरणं च मङ्गलसमं यस्यां समुत्पद्यते
तां काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते ॥ ४३० ॥

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
पयःपानं भुजंगानां केवलं विषवर्धनम् ॥ ४३१ ॥

उरो मासद्वये जाते त्रिभिर्मासैस् तथोदरम् ।
चतुर्मासैर्नितम्बं च हस्तपादाविव स्थितः ॥ ४३२ ॥

एक एव खगो मानी चिरं जीवतु चातकः ।
पिपासितो वा म्रियते याचते वा पुरंदरम् ॥ ४३३ ॥

एक एव सतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ४३४ ॥

एकान्तशीलस्य दृढव्रतस्य पञ्चेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मचिन्तागतमानसस्य मोक्षो ध्रुवं तस्य सहंसकस्य ॥ ४३५ ॥

एतस्मात् कथमिन्द्रजालमपरं स्त्रीगर्भवासोऽस्थिरं
रेतः श्वे[श्यो ?]तति मस्तमस्तकपदाविर्भूतनानाङ्कुरम् ।
पर्यायेण शिशुत्वयौवनजरावेषैरशेषैर्वृतं
पश्यत्यत्ति शृणोति जिघ्रति मुहुर्निद्राति जागर्ति च ॥ ४३६ ॥

---

**430** E V98, F4 V105 (104); GVS 2387 V90, BORI 331 V123; BORI 381/1884–87 V99 Meh and Bik 3278 V102; Bik 3279 V109 (6); Bik 3280 V105 (106); Bik 3281 V101 (102); VSP V103; Harilal's lith. ed. V88. — BIS. 1253 (3791); Bhartṛ. lith. ed. II. 3. 88.

**431** Wai2 extra 8. — BIS. 1287 (489). Pañc. I. 434. Hit. III. 4 (*cdab*). Galan Varr. 142 (*cdab*). Cān. 73 in Weber. Subhāsh. 151; Śp. 418 (Cāṇakya); SRB. p. 39. 4 (Cāṇakya); SA. 27. 46. — [a]) उपकारोऽपि नीचानां; SU. 1532; PT. 8. 26; SSD. 2. f. 131b; SSV. 683; SMV. 23. 21; JSV. 209. 6.   **432** Meh V146.

**433** A N10. — BIS. 1340 (514). Cāt. 8 in Haeb. p. 239. 6 in Ewald Z. f. d. K. d. M. IV. 375. Subhāsh 298; Śp. 852, SBH. 674; SRB. p. 226. 148; SRK. p. 189. 2 (Śp.); SDK. 4. 66. 3 (p. 273); SRH. 102. 6 (Pañcatantra); ST. 6. 2; VS. 86; SK. 3. 147; SU. 1183, PT. 10. 43; PMT. 223; SG. f. 14a; SM. 1574; BPS. f. 35a. 235; SSV. 1546; SMV. 28. 4; JS. 474, JSV. 284. 3; SKG. f. 18a.

**434** C V106 (107), BORI 329 N105 (100); Bik 3280 N63; Bik 3279 N44. — BIS. 1341 (3818, cf. also 520). Mbh. 5. 1018 (crit. ed. 5. 33. 47), 12. 5959; SA. 23. 5; SN. 555; SSV. 1533; JS. 468.

**435** GVS. 2387 V68; ISM Gore144 V190.

**436** BORI 328 V145 (137); GVS 2387 V150. — [a]) यद्गर्भवासस्थितं. — [b]) [illegible]कस्यामोद्गतभव्याङ्कुरम् । — °जराभेदैरनेकैर्वृतं. — [d]) वपुर् (for मुहुर्); Meh V144 संवेशा°; Bik 3279 V141 (37).

एतस्याः स्तनभारभङ्गुरभुरः कीर्णा नितम्बस्थली
मध्यं मध्यजनाभिगर्तपठितं नाशाचलं चुम्बति ।
धैर्यं धेहि मनःकुरङ्ग पुरतो रोमावलीवागुराम्
एतद्भ्रान्तिगतागतव्यसनिनः किं वा विधेयं विधे ॥ ४३७ ॥

एतानि तानि नवयौवनगर्हितानि मिष्टान्नपानशयनासनलालितानि ।
हारार्धहारमणिमण्डितभूषणानि भूमौ पतन्ति विलुठन्ति कलेवराणि ॥४३८॥

एता हसन्ति च रुदन्ति च कार्यहेतोर् विश्वासयन्ति च परं न च विश्वसन्ति ।
तस्मान् नरेण सु* शीलसमन्वितेन नार्यः श्मशानघटिका इव वर्जनीयाः ॥४३९॥

एते ते दिवसास् त एव तरवस् ताश् च प्रगल्भस्त्रियस्
तच् चैवाम्रवनं सकोकिलरुतं सेयं सचन्द्रा निशा ।
वातः सोऽपि च दक्षिणो धृतिहरः सोऽयं वसन्तानिलो
हा तारुण्य विना त्वयाद्य सकलं पालालभारायते ॥ ४४०

ॐकारे सत्प्रदीपे मृगय गृहपतिं सूक्ष्ममेकान्तरस्थं
संयम्य द्वारवाहं पवनमविरतं नायकं चेन्द्रियाणाम् ।
वाग्जालं कस्य हेतोर्वितरसि हि गिरां दृश्यते नैव किंचिद्
देहस्थं पश्य नाथं भ्रमसि किमपरे शास्त्रमोहान्धकारे ॥ ४४१ ॥

कदा भिक्षाभक्ष्यैः करगलितगङ्गाम्बुतरलैः
शरीरं मे स्थास्यत्युपरतसमस्तेन्द्रियसुखम् ।
कदा ब्रह्माभ्यासस्थिरतनुतयारण्यविहगाः
पतिष्यन्ति स्थाणुभ्रमहतधियः स्कन्धशिरसि ॥ ४४२ ॥

---

437 Meh S106. 438 BORI 326 V5 (4).

439 Es V67 (66). — BIS. 1458 (575) Mṛcch. 62. 63. Paño. ed. Koseg. I. 206. ed. orn. 154. ed. Bomb. 192. Vikramac. 16; SRB. p. 355. 8; SRK. p. 105. 3 (BIS.).

440 D V132; F1.2 V109, BORI 331 V133; BORI 328 V142 (134); NS2 V89 (88); Pun697 V121; Pun. 2885 S102 (97); BVB5 V117 (extra); Bik3279 V138 (34); Bik3281 V129 (130), Bik3278 V130; GVS. 2387 V119. — a) कृतपस्तार्धंदर्विंबाननाः. — b) तद्वैवासवनं सकोकिलरवः...क्षिपा । — c) वायुर्वातसदक्षिणो मकपजः पंचेषु संदीपितो. — SA. 38. 70; SN. 569.

441 Ujj 6414 V108; HU 468 V111. — BIS. 1491 (3857) Bhartṛ. in Schiefner and Weber. p. 25 Same as 461.

442 — BIS. 1524 (593). Śāntiś. 4. 18 in Haeb. p. 428. Śatakāv. 38 Nītisaṁk. 88; SRB. p. 368. 56, SDK. 5. 60. 1 (p. 316-7, Bh.).

कन्थासंचरणं कदन्नमशनं ताम्बूलहीनं मुखं
  खट्वैका त्रुटिता विशीर्ण * * * जाया जरामर्कटी ।
वृत्तिः कायविशोषणेन शिशवो * * * * * *
  मूढानां सुखलिप्सया ननु तथाप्यास्था गृहस्थाश्रमे ॥ ४४३ ॥

कपिकुलनखमुखविदलिततरुतलनिपतितफलाशिनेपि वरम् ।
न पुनर्धनमदगर्वितभ्रूभृङ्गविलासिनी दृष्टिः ॥ ४४४ ॥

कलिलं चैकरात्रेण पञ्चरात्रेन[०ण]बुद्बुदम् ।
पक्षैकेनाण्डकः सोऽथ मासपूर्णे शिरो कुरु ॥ ४४५ ॥

कल्पान्तपवना वान्तु यान्तु चैकत्वमर्णवाः ।
तपन्तु द्वादशादित्या नास्ति निर्मनसः क्षतिः ॥ ४४६ ॥

कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
कश् चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ ४४७ ॥

काचिन् मृगाक्षी प्रियविप्रयोगे गन्तुं निशापारमपारयन्ती ।
उद्गातुमादाय करेण वीणामेणाङ्कमालोक्य शनैरहासीत् ॥ ४४८ ॥

कार्कश्यं स्तनयोर्दृशोस् तरलतालीकं मुखे श्लाघ्यते
  कौटिल्यं कचसंचये च वदने मान्द्यं त्रिके स्थूलता ।
भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये
  यासां दोषगणो गुणा मृगदृशां ताः स्युः पशूनां प्रियाः ॥ ४४९ ॥

कावेरीतीरभूमीरुहभुजगवधूभुक्तमुक्तावशिष्टः
  कर्णाटीचीनपीनस्तनवसनदशान्दोलनस्पन्दमन्दः ।
लोलल्लाटीललाटालकतिलकलतालास्यलीलाविलोलः
  कष्टं भो दाक्षिणात्य प्रचलति पवनः पान्थ कान्ताकृतान्तः ॥४५०॥

---

443 BVB2 V103.

444 BVB2 (f. 13a) V extra on marg. Bik 3275 V11. — [b]) भोजने न वरम्. — [d]) विकारिणी दृष्टिः. 445 Mch. V145. cf. Garbhopanisad 3.

446 1SM Gore 144 V175. — Śp. 4223. 447 Nag299 N119.

448 Ms.₅ Ś II-2. — Śp. 519; SRB. p. 185. 31, SRK. p. 147; 6 (Śp.); SK. 3. 381; SL. f. 11a, BPS. f. 30a. 191.

449 E₅ V65 (interpolation?). — BIS. 1670 (647) Pañc. ed. Koseg. I. 205. ed. orn. 153. ed. Bomb. 190; SRB. p. 350. 78.

450 E₂ Ś112 (extra). — Śp. 3811 (Rākṣasapaṇḍita); SRB. p. 335. 136; SU. 811 (Akbarī-Kālidāsa); Padyaveṇī 607, SG. f. 73b; BPS. f. 25a. 156.

किं कन्दाः कन्दरेभ्यः प्रलयमुपगताः पादपाः किं विशीर्णाः
किं वा शोषं गतास्ते गिरिकुहरगता निर्झरा वारिपूर्णाः ।
किं तद् वैराग्यमूलं सुचरितनिशितं ज्ञानखड्गं प्रनष्टं
येन द्वारे नृपाणां धनमदमलिनाः सङ्गमायान्ति धीराः ॥ ४५१ ॥

किं कर्पूरैः किमु मलयजैरम्बुभिः किं हिमांशोः
किं ताम्बूलैः किमथ वसनैः किं नु भोज्यैर्दुरापैः ।
चिद्रूपाणां सरसवचसां सज्जनानां प्रियाणां
लीलागोष्ठी यदि सवयसां लभ्यते पुण्यलभ्या ॥ ४५२ ॥

किंचिदन्तर्हिते भानौ पद्मिनी वीतरागिणी ।
आलिङ्ग्य मधुपं शेते प्रियः को नाम योषिताम् ॥ ४५३ ॥

किं तेन हेमगिरिणा रजताद्रिणा वा यत्राश्रिताश्च तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण कङ्कोलनिम्बकटुजान्यपि चन्दनानि ॥ ४५४ ॥

किं बाले तव सुव्रणोऽयमधरो गात्रं च किं ते श्लथं
रात्रावद्य विदग्धभोगपटुना दष्टा भुजंगेन वै ।
यद्येवं सहसा मृतो[ता]सि न कथं कालेन दष्टा सती
जातं तत्समयेऽप्यनन्यमनसा हाहेति मन्त्रो मया ॥ ४५५ ॥

किं यामि विक्रमपुरं किमु कामरूपं किं यामि दक्षिणपथं मधुरां व्रजामि ।
आराधयामि शिवनाथमनाथनाथं विम्बायमानहृदयः किमहं करोमि ॥ ४५६ ॥

किं शाकानि न सन्ति भूधरसरित्कुञ्जेषु मूलानि वा
किं वा जीवनमेतदेव विहितं यद् वा वनं न क्वचित् ।
येन श्रीमदमोहमूढमनसां स्थित्वाग्रतो भूभृतां
श्वासोत्कम्पकदर्थिताक्षरपदं देहीति वागुच्यते ॥ ४५७ ॥

---

451 F2 V60. — a) किं दाराः कन्दराभ्यः । — b) Omitted. — c) °ग्ययुक्तं (for °ग्यमूलं). — d) धनमलिनमनां सङ्गतिं यान्ति धीराः (sic). Jodhpur1 and Nag 1087 V59. BVB5 V62. — c) ते (for तद्) ·विनष्टं. Also Nag421 V64, Meh V159. — BIS. 1725 (665) as variant for किं कन्दा· कन्दरेभ्यः from Subhāsh. 66.

452 Pun2101 N extra 3 (on marg.), NS1 N117 (119). — SS. 57. 9.

453 G1 Ś III-10. — b) पद्मिनीव विरा°. — c) मधुपः; M1.2 Ś III-11. Adyar XXIII-B-10 Ś III-11, Pun2885 Ś 60 (54). HU2133 and BORI Limaye273 Ś 56; Pun1538 extra 2, Śru309 Ś 26. — b) गृढरागिणी. — c) मधुरे.

454 W N40. — d) v.l. कटुकान्यपि, कटुजा अपि. — BIS. 1754 (681) Bhartr. ed. Bohl. extra 8. lith. ed. I and III. 2. 78. Galan. 80. Vetālabh. Nitipr. 12. in Haeb. p. 528; Sp. 1067 (cdab); SRB p. 215. 7; SBH. 1006; SDK. 4.34. 1 (p. 249), SRK. p. 19. 77, p. 196. 4 (Sp.)· VS. 294, SS. 29. 6; SK. 2. 186, 6. 178; SU. 1323; PT. 10. 12; SSD. 2. f. 54, SMV. 9. 25, SKG. f. 15b.

455 Bikaner 3275 Ś 85. 456 HU271 V3; Bik3277 N I-4.

457 C and Raj4 V73. — a) शाका विरमन्ति. — b) चात्रैव वाम्यत्कचित्. — c) भूभुजां (for भूभृतां). — d) °ताक्षरपदा. F1 V70, F4 V76 (75); IO 1151b V72; Nag421 V66, RASB11030 V74. — SBH. 3472.

कियती पञ्चसहस्री कियती लक्षापि कोटिरपि कियती ।
औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ ४५८ ॥

कीर्तिस् ते धनिका धनं मधुरिमा तस्याधमर्णा सुधा
शीतांशुप्रतिभूस् तदर्थनमियं कर्तुं दिवं धावति ।
सा लीना तव वाचि भोजनृपते चन्द्रो निरङ्कध्वनिः
शङ्कातोंकभृदंशुकावृततनुर्नक्तं परिभ्राम्यति ॥ ४५९ ॥

कुचशैलसंनिधाने त्रिवलिनदीतीरे तन्व्याः कुचचत्वरे चपले ।
इत्थं छलयति पिशाचः पुरुषाणां हि मनागपि शवलितम् ॥ ४६० ॥

कृत्वोंकारप्रदीपं मृगय गृहपतिं सूक्ष्मनाड्यन्तरस्थं
संयम्य द्वारवाहं पवनपटुतरं नायकं चेन्द्रियाणाम् ।
वाग्जालं कस्य हेतोः प्रलपसि बहुधा दृश्यते नैव किंचिद्
देहस्थं पश्य नाथं भ्रमसि किमपरे शास्त्रजाले विशाले ॥ ४६१ ॥

कृशोऽपि धन्यः सुजनः सुबुद्धिमान् परोपकारार्थमिहार्थसंपदः ।
महापथावस्थितपादपः शुभः कृशोऽपि काष्ठाय फलान्वितः किमु ॥ ४६२ ॥

कृशोऽपि सिंहो न समो गजेन्द्रैः सत्त्वं प्रधानं न च मांसराशिः ।
अनेकवृन्दानि वने गजानां सिंहस्य नादेन मदं त्यजन्ति ॥ ४६३ ॥

कृष्णः करोतु कल्याणं कंसकुञ्जरकेसरी ।
कालिन्दीकूलकल्लोलकोलाहलकुतूहली ॥ ४६४ ॥

केषांचिन् निजवेश्मनि स्थितवतामालस्यवश्यात्मनां
दृश्यन्ते प[फ]लिता लता इव चिरं संपन्नशाखाः श्रियः ।
अब्धिं लङ्घयतां खनीः खनयतां क्षोणीतलं क्षुन्दताम्
अन्येषां व्यवसायसाहसधियां तन् नास्ति यत् पच्यते ॥ ४६५ ॥

कैवर्तकर्कशकरग्रहविच्युतोऽसौ जाले पुनर्निपतितः शफरो वराकः ।
जालात् पुनर्विगलितोऽपि धृतो बकेन दैवाहतो व्रजति यत्र विपत्पुरस्तात् ॥४६६

---

458 BORI326 Ś80; VSP Ś 101. — SRB. p. 70. 23; SHV. f. 69a. 738; SS. 17. 48; SSV. 550. 459 Js extra 4.

460 Bik 3280 Ś102; Bik3279 S 98(99); Pun1538 N100.

461 ISM Gore 144. V191, GVS2387 V69. — °) नटपसि (for प्रलपसि). BVB5 V106 (extra); variant of 441. 462 Śrṅ309 N72.

463 A N46. — BIS. 7504 Subhâsh. 109; SS. 54. 1.

464 Wai2 N1. — JSV. 102. 1.

465 IO3318 (with Hindi trans. by Indrajit) N64. — SRB. p. 95. 126.

466 Bar5199 N31. — BIS. 1918 (740) Pañc. ed. Koseg. II. 87. Subhâsh 68; SRB. p. 92. 75; SRK. p. 219. 30 (Kalpataru); SG. f. 34a; SSD. 2. f. 52b.

को न याति वशं लोके मुखपिण्डेन पूरितः ।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ ४६७ ॥

को लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः संगमः
का हानिः समये च्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ ४६८ ॥

क्रीडां करिष्यति कियच्चिरमेकहंसः स्निग्धोल्लसत्कलरवोऽपि शरीरवाचाम् ।
कालेरघट्टघटिकावलिपीयमानम् आयुर्जलं पिबति शोषमुपैति यत्र ॥ ४६९ ॥

क्वचिद्वीणानादः क्वचिदपि च हाहेति रुदितं
क्वचिद् विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः ।
क्वचिद् रम्या रामा क्वचिदपि जराजर्जरतनुर्
न जाने संसारः किममृतमयः किं विषमयः ॥ ४७० ॥

क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः
स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ।
दुष्पूरोदरपूरणाय पिबति स्रोतःपतिं वाडवो
जीमूतस् तु निदाघसंभृतजगत्संतापविच्छित्तये ॥ ४७१ ॥

---

467 — BIS. 1930 (748) Bhartr. ed. Bohl. extra 20. Haeb. **2.** 105; SRB. p. 156. 156; SRK. p. 232. 20 (Sphuṭaśloka), ST. **13.** 2. SK. 147a, SL. f. 32b.

468 W N103. — BIS. 1943 (755) Bhartr. ed. Bohl. extra 10. lith. ed. I. **2.** 101; III. 102. Galan 105. Nītisaṃk. 27. Kavitamṛtak. 53. Prasaṅgābh. 11b; SRB. p. 180. 1405; SRK. p. 239 84 (Bh.), SL. f. 30a, SN. 841; SSD. **2.** f. 157a; SMV. **11.** 2.

469 D V142; BORI 328 V160 (51). — [a]) करिष्यसि…एष (for एक-). — [c]) कालारघट्ट. — [d]) झटिति (for पिबति); Bik 3279 V154 (50).

470 A V66; Fs V69 (*acbd*). — [a]) वीणावादः. — [c]) नारी (for रामा). °दपि च जराजीर्णवपुषः; Fs V102. — [a]) -वाद्यं (for -नादः). — [b]) °दपि च सुरा°. — [c]) क्वचिद्रामा रम्याः …गलत्कुष्ठवपुषो (for जरा°); X V68 (*cabd*). — [a]) वाणी (for -नादः). — [b]) हृतासानमतुलं (for सुरा°). — [b]) गलत्कुष्ठरुधिरा (for जरा°); BORI 326 V98 (97) (*acbd*). — [a]) वाद्यं (for नादः). — [c]) क्वचिद्रामा रम्या… -वपुः (for -तनुः); BORI 328 V114 (112); BORI 329 V36, BU V107 (105); Wai2 V92; Jodh1 V77; Jod3 V37 (*bcad*), Pun2101 V55, Pun697 V66; GVS 2387 V121; HU 2144 V97 (93); HU 2145 V106 (99); Meh V114; PU496 V103 (102); Bik 3279 V115 (12); Bik 3280 V111 (12). — BIS. 1989 (3991) Bhartr. in Schiefner and Weber. p. 25. Subhāsh. 28. 313; SRB p. 89. 5 (*bacd*); SBH. 2941. — [a]) नृत्तं गीतं (for वीणानादः); SRK. p 99. 5 (*bacd* Bh.); RKB. f. 39a (Bh. var.); SMV. **8.** 13 (*bcad*).

471 Nag 421 Tau 4911 and 4934, N12. N15 in Telang's Ms. D. — BIS. 2032 (794) Vikramaca. 5 Śp. 773 (Meghānyokti 9), SRB. p. 52. 257 (*also* p. 230. 37); SBH 285; SRK. p. 12. 21 (ST.) SA. **27.** 15; Prabandhacintāmaṇi (Singhi ed.) 128; ST. **1.** 33; SS. **24.** 13; SK **2.** 74, **6.** 34; SSD. **2.** f. 123a; JSV. **182.** 6; SKG. f. 15b.

श्रोणीश्राश्रयिणां परोपकरणाभावाद्वात्तश्रियां
कार्पण्यात् सुधियामनध्ययनतो यूनां प्रवासाश्रयात् ।
श्रावणां हरिपादभक्तिविरहादायुर्वृथा गच्छती-
त्येवं शासनमासनं प्रतिदिनं नादो भवत्युच्चकैः ॥ ४७२ ॥
क्षौमं वासो वनभुवि गुहातीरगङ्गा निपानं
भोज्यं भिक्षा तरुतलगता वीथिका दीर्घशय्या ।
भक्तिः कान्ता हरचरणयोः कीर्तनं क्रीडितानि
ध्यानं शंभोः सुरतिमनिशं त्वत्प्रसादात् ममास्तु ॥ ४७३ ॥
खद्योतो द्योतते तावद् यावन् नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥ ४७४ ॥
गङ्गातरङ्गनिर्धूतशीतले वा शिलातले ।
सुप्यते सुरतश्रान्तकान्तकान्ताकुचस्थले ॥ ४७५ ॥
गङ्गा ता[पा?]पं शशी तापं दैन्यं कल्पतरुस् तथा ।
पापं तापं च दैन्यं च हन्ति सङ्गो महात्मनाम् ॥ ४७६ ॥
गतं कर्णाभ्यर्णं प्रसरति तथाप्यक्षियुगलं
कुचौ कुम्भारम्भौ तदपि चुचुकोत्तम्भनरुची ।
नितम्बप्राग्भारो गुरुरपि गुरुत्वं मृगयते
कथंचिन् नोऽजैषीस् तरुणिमनि मन्ये मृगदृशः ॥ ४७७ ॥
गतं तत् तारुण्यं तरुणिहृदयाह्लादजनकं
विशीर्णा दन्तालिर्गतिरपि शनैर्यष्टिशरणा ।
शिरः शुक्लं चक्षुर्घनपटलसुच्छादितमहो
मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ ४७८ ॥

---

472 Ana (Apte Fragment) V152. — SRB. p. 180. 1049. — [d]) -त्येवं कांस्यसमुच्चयः...वदत्युच्चकैः; SRK. p. 238. 76 (ST.); SHV. App. I f. 2b). 27.

473 D V144. — [a]) नदीतीरगं वारि पानं (for गुहातीर°). — [d]) सुरतमरणाम-निशं (corrupt); F3 V110; BORI 328 V164 (55). — [c]) करचरणयोः...क्रीडितानां; Bik 3280 V158 (54).

474 Pun2885 f. 24b (top marg.). — Śp. 738; SRB. p. 209. 2; SRK. p. 168. 2 (Śp.); ST. 23. 1; SU. 1099; PT. 10. 1; PMT. 184; SSD. 2. f. 3b.

475 Wai2 Ś88; NS1 V2 (*cdab*) — °राज्यते सुरतक्लान्त-; ISM Kaḷamkar 846. — [a]) गङ्गानिर्धौतसलिल-; Ś 85 (*cdab*) in R. P. Dewhurst J. U. P. Hist. Soc. I.

476 ASP1461 extra 1.

477 BOKI326 Ś6. — SKM. 52. 7 (Rudra); Rudraṭa's Śṛṅgāratilaka (KM. 3, p. 117); SK. 5. 260 SG. f. 66b.

478 F4 Ś80. — [d]) भोगेभ्यः (for विषयेभ्यः); Āna 624 V99. — [a]) हृदयानन्द°. — [b]) निजगतिरभूद् (for गतिरपि शनैर्). — [c]) जडीभूता दृष्टिः श्रुतिविरहितं कर्णयुगलं. — SRB. p. 76. 41.

गतं तत् तारुण्यं युवतिहृदयाह्लादजनकं
व्यतीतः सौन्दर्यः समदकरिकुम्भौघदलनः ।
जरा निर्लज्जेयं शिरसि पदमुच्चैः कृतवती
परब्रह्मेदानीं जननमरणोच्छेदजनकम् ॥ ४७९ ॥

गन्धाढ्यां नवमल्लिकां मधुकरस् त्यक्त्वा गतो यूथिकां
तां त्यक्त्वाशु गतः स चम्पकवनं तस्मात्सरोजं गतः ।
बद्धस् तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः
संतोषेण विना पराभवपदं पश्यन्ति सर्वे जनाः ॥ ४८० ॥

गर्भस्थं जातमात्रं शयनतलगतं मातुरुत्सङ्गसंस्थं
बालं वृद्धं युवानं परिणतवयसं विश्वमान्यं बलाढ्यम् ।
वृक्षाग्रे शैलशृङ्गे नभसि पथि जले कोटरे पञ्जरे वा
पाताले वा प्रविष्टं हरति च सततं दुर्निवार्यः कृतान्तः ॥ ४८१ ॥

गर्वं नोद्वहते न निन्दति परान् नो भाषते निष्ठुरं
प्रोक्तं केनचिदप्रियं च सहते क्रोधं न चालम्बते ।
श्रुत्वा काव्यमलक्षणं परकृतं संतिष्ठते मूकवद्
दोषांश् छादयते स्वयं न कुरुते ह्येतत् सतां लक्षणम् ॥ ४८२ ॥

गात्रं पात्रं प्रथमवयसि प्रेयसीनां स्तनानाम्
आश्लेषाणां तदिदमधुना वन्यमेतत् कृतार्थम् ।
येनासीने त्वयि गिरितटे श्लिष्टनासाग्रदृष्टौ
हर्षस्पर्शं जहति हरिणश्रेणयः कायकण्डूः ॥ ४८३ ॥

गात्रैर्गिरा च विकलश् चटुमीश्वराणां कुर्वन्नयं प्रहसनस्य नटः कृतोऽसि ।
न त्वां पुनः पलितकर्णकभाजमेनं नाट्येन केन नटयिष्यति दीर्घमायुः ॥ ४८४ ॥

---

479 GVS2387 V59; BVB5 V103 (extra). — [b]) कुंभैकदलनः. — SK. 7. 37.

480 ISM Kalamkar 692 V71. — [b]) त्यक्त्वा गतभृङ्ग चम्प° (corrupt). — BIS. 2083 (821) Bhramarāṣṭaka 2 in Haeb. 240. Subhāsh. 153; SRB. p. 75. 18; SBH. 753; SRK. p. 186. 14 (Kavysamgraha).

481 BORI328 V123 (119). — [c]) वृक्षाग्रे…पथगते (for पथिगते). — BIS. 2094. Subhāsh. 146; SA. 38. 24, SS. 23 10.

482 NS3 N45. — [a]) नो दहते; Ann624 N45. — [b]) क्रोधेन चालम्बते. — BIS. 2095. Subhāsh. 195; SN. 709; JSV. 182. 2.

483 D V137; F1.2 V111. — [b]) D F1 वन्यमन्यत्कृतार्थम्। — [c]) F1 °प्रदृष्टे; BORI328 V149 (141). — [d]) कामकण्डूः; Pun697 V23; SVP159 V extra 17. — [b]) वन्यमन्ये कृतार्थम्। — [d]) हर्षस्पर्शाज्जहति।; Meh V153; HU271 and VSP V135; Bik3279 V145 (41); Bik3281 V133 (134); Bik3278 V134.

484 H V7; NS3 V6. — SDK. 5. 42. 2 (p. 305, Murāri).

गान्धर्वं गन्धसंयुक्तं ताम्बूलं भारती कथा ।
इष्टा भार्या प्रियं मित्रमपूर्वाणि दिने दिने ॥ ४८५ ॥

गृहपदमिदं धर्मारण्यं किमत्र विचित्रता
भवति मनसो यत्रासङ्गः स एव निबन्धनम् ।
चरमवयसि त्यक्त्वा गेहं वने वसता मया-
प्यधिगत इवापत्यस्नेहो लतासु मृगीषु च ॥ ४८६ ॥

ग्रामे ग्रामे कुटी शून्या भैक्ष्यमन्नं गृहे गृहे ।
मार्गे मार्गे जरद्वस्त्रं वृथा दैन्यं नृपे नृपे ॥ ४८७ ॥

चक्रं सेव्यं नृपः सेव्यो न सेव्यः केवलो नृपः ।
चक्रस्यापि विरोधेन वासः प्रेतत्वमागतः ॥ ४८८ ॥

चक्षुः संवृणु वक्त्रं वीक्ष करणं वक्षः समाच्छादयतां
हृद्य स्फूर्जमनेकभावचतुरं शृङ्गाररम्यं वचः ।
मन्ये ते नवनीतपिण्डसदृशा मूर्त्या भजन्ति स्त्रियं
मुग्धे किं परिवेदितेन वपुषा पाषाणकल्पा वयम् ॥ ४८९ ॥

चत्वारो धनदायादा धर्माग्निनृपतस्कराः ।
ज्येष्ठस्यापि विरोधेन त्रयं कूर्व्यंतनतिस ॥ ४९० ॥

[ चन्द्रः शो ]भति निर्मले च गगने ताराविचित्राम्बरे
हंसः शोभति पद्मपत्रसलिले वैडूर्यवर्णोदके ।
हारः शोभति कामिनीकुचतटे स्त्री चञ्चला यौवने
राजा शोभति मन्त्रिभिः परिवृते सिंहासने सुस्थितः ॥ ४९१ ॥

चपलतरतरङ्गैर्दूरमुत्सारितोऽपि
प्रथयति तव कीर्तिं दक्षिणावर्तशङ्खः ।
परिकलय पयोधे विष्णुपादार्घयोग्यस्
तव निकटनिषण्णैः क्षुल्लकैः श्लाघ्यता का ॥ ४९२ ॥

---

485 C Ś91; [C₂ Ś96]; ISM Kalamkar 195 Ś101 (102); Nag421 Ś100 — SRB. p. 159. 266.

486 D V146. — a) किमत्र दिवी चिसतां (corrupt); BOR1328 V166 (57). — b) यत्रासंतः; Bik3279 V160 (56). 487 Ujj6414 V30.

488 HU2145 N9 (4). — SRB. p. 146. 161 (cd var.); Śp. 1378 (c var.).

489 Pun 2127 and Bik 1027 V74; HU271 V75.

490 HU2145 N78 (1) corrupt. — SRB. p. 156. 164 (cd तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति बान्धवाः); SRK. p. 237. 67 (Sphuṭaśloka).

491 HU2145 N123 (105).

492 X₂ extra 4. — Śp 1092; SRB. p. 216. 21.

